चित्तंचमआधीतंचमेवाक्चमेमनश्चमेचक्षुश्चमेश्रोत्रंचमेदक्षश्चमेबलंच
मओजश्चमेसहश्चमआयुश्चमे जराचमआत्माचमेतनूश्चमेशर्मचमेवर्म
चमेंगानिचमेस्थानिचमेपरूꣳषिचमेशरीराणिचमे ॥ १ ॥ ज्यैष्ठ्यं
चमआधिपत्यंचमेमन्युश्चमेभामश्चमेमश्चमेम्भश्चमेजेमाचमे महिमा
चमेवरिमाचमे प्रथिमाचमेवर्ष्माचमेद्राघुयाचमे वृद्धंचमेवृद्धिश्चमेस
त्यंचमेश्रद्धाचमेजगच्चमेधनंचमेवशश्चमे त्विषिश्चमेक्रीडाचमेमोद
श्चमेजातंचमेजनिष्यमाणंचमेसूक्तंचमेसुकृतंचमे वित्तंचमेवेद्यंचमेभू
तंचमेभविष्यच्चमेसुगंचमे सुपथंचमऋद्धंचमऋद्धिश्चमेक्लृप्तंचमेक्लृप्तिश्च
मेमतिश्चमेसुमतिश्चमे ॥ २ ॥ शंचमेमयश्चमेप्रियंचमेनुकामश्चमेकाम
श्चमेसौमनसश्चमेभद्रंचमेश्रेयश्चमेवस्यश्चमेयशश्चमे भगश्चमेद्रविणंच
मेयन्ताचमेधर्ताचमेक्षेमश्चमे धृतिश्चमेविश्वंचमेमहश्चमेसंविच्चमेज्ञात्रंच

मेसूश्चमेप्रसूश्चमेसीरंचमेलयश्चमऋतंचमेमृतंचमे यक्ष्मंचमेनामयच्च
मेजीवातुश्चमेदीर्घायुत्वंचमेनमित्रंचमे भयंचमेसुगंचमेशयनंचमेसू
षाचमेसुदिनंचमे ॥ ३ ॥ ऊर्क्चमेसूनृताचमेपयश्चमेरसश्चमेघृतंचमे
मधुचमेसग्धिश्चमेसपीतिश्चमे कृषिश्चमेवृष्टिश्चमेजैत्रंचमऔद्भिद्यंचमे
रयिश्चमेरायश्चमेपुष्टंचमेपुष्टिश्चमेविभुचमेप्रभुचमेबहुचमे भूयश्चमेपू
र्णंचमेपूर्णतरंचमे क्षितिश्चमेकूयवाश्चमेन्नंचमेक्षुच्चमेव्रीहयश्चमेयवाश्च
मेमाषाश्चमेतिलाश्चमेमुद्गाश्चमेखल्वाश्चमेगोधूमाश्चमेमसुराश्चमे प्रियं
गवश्चमेणवश्चमेश्यामाकाश्चमेनीवाराश्चमे ॥ ४ ॥ अश्माचमेमृत्तिका
चमेगिरयश्चमेपर्वताश्चमेसिकताश्चमे वनस्पतयश्चमेहिरण्यंचमेयश्चमे
सीसंचमेत्रपुश्चमेश्यामंचमेलोहंचमेग्निश्चमआपश्चमे वीरुधश्चमओष
धयश्चमेकृष्टपच्यंचमेकृष्टपच्यंचमेग्राम्याश्चमे पशवआरण्याश्चयज्ञेन

कल्पंतांवित्तंचमेवित्तिश्चमेभूतंचमेभूतिश्चमे वसुचमेवसतिश्चमेकर्मंच मे शक्तिश्चमेर्थश्चमएमश्चमइतिश्चमेगतिश्चमे ॥ ५ ॥ अग्निश्चमइंद्रश्च मेसोमश्चमइंद्रश्चमेसविताचमइंद्रश्चमे सरस्वतीचमइंद्रश्चमेपूषाचमइ द्रश्चमेबृहस्पतिश्चमइंद्रश्चमे मित्रश्चमइंद्रश्चमेवरुणश्चमइंद्रश्चमेत्वष्टा चमइंद्रश्चमेधाताचमइंद्रश्चमेविष्णुश्चमइंद्रश्चमेश्विनौचमइंद्रश्चमे मरु तश्चमइंद्रश्चमेविश्वेचमेदेवाइंद्रश्चमे पृथिवीचमइंद्रश्चमेंतरिक्षंचमइंद्र श्चमेद्यौश्चमइंद्रश्चमेदिशश्चमइंद्रश्चमेमूर्धाचमइंद्रश्चमे प्रजापतिश्चम इंद्रश्चमे ॥६॥ अꣳशुश्चमेरश्मिश्चमेदाभ्यश्चमेधिपतिश्चमउपाꣳशुश्च मेंतर्यामश्चमऐंद्रवायवश्चमेमैत्रावरुणश्चमआश्विनश्चमे प्रतिप्रस्थानं श्चमेशुक्रश्चमेमंथीचमआग्रयणश्चमेवैश्वदेवश्चमे ध्रुवश्चमेवैश्वानरश्चम ऋतुग्रहाश्चमेतिग्राह्यांश्चमऐंद्राग्नश्चमेवैश्वदेवश्चमे मरुत्वतीयांश्चमेमा



॥ ८ ॥

हैंद्रश्चंमआदित्यश्चंमे सावित्रश्चंमेसारस्वतश्चंमेपौष्णश्चंमेपात्नीवतश्च
मेहारियोजनश्चंमे ॥ ७ ॥ इध्मश्चंमेबर्हिश्चंमेवेदिश्चमेधिष्णियाश्चमेस्रु
चंश्चमेचमसाश्चंमेग्रावाणश्चमे स्वरवश्चमउपरवाश्चंमेऽधिषवणेचमेद्रो
णकलशश्चंमेवायव्यानिचमेपूतभृच्चमआधवनीयश्चम आग्नीध्रंचमेह
विर्धानंचमे ग्रहाश्चंमेसदश्चमेपुरोडाशाश्चमेपचताश्चंमेवभृथश्चमेस्वगा
कारश्चमे ॥ ८ ॥ अग्निश्चमेघर्मश्चमेर्कश्चंमेसूर्यश्चमेप्राणश्चंमेश्वमेधश्च
मेपृथिवीचमेऽदितिश्चमे दितिश्चमेद्यौश्चमेशक्करीरंगुलयोदिशश्चमेयज्ञे
नकल्पंतामृक्चमेसामचमेस्तोमश्चमेयजुश्चमे दीक्षाचमेतपश्चमऋतु
श्चमेव्रतंचमेहोरात्रयोर्वृष्ट्याबृहद्रथंतरेचमेयज्ञेनकल्पेतां ॥ ९ ॥ गर्भा
श्चमे वत्साश्चमेत्र्यविश्चमेत्र्यवीचमेदित्यवाट्चमेदित्यौहीचमेपंचावि
श्चमेपंचावीचमेत्रिवत्सश्चमेत्रिवत्साचमे तुर्यवाट्चमेतुर्यौहीचमेपष्ठवा

श्चमेपष्ठौहीचमउक्षाचमेवशाचमऋषभश्चमेवेहच्चमेऽनड्वान्चमेधेनुश्चम
आयुर्यज्ञेनकल्पतांप्राणोयज्ञेनकल्पतामपानोयज्ञेनकल्पतां व्यानोयज्ञे
नकल्पतांचक्षुर्यज्ञेनकल्पताꣳश्रोत्रंयज्ञेनकल्पतां मनोयज्ञेनकल्पतांवा
ग्यज्ञेनकल्पतामात्मायज्ञेनकल्पतांयज्ञोयज्ञेनकल्पतां ॥ १० ॥ एकाच
मेतिस्रश्चमेपंचचमेसप्तचमेनवचमएकादशचमे त्रयोदशचमेपंचदश
चमेसप्तदशचमेनवदशचमएकविꣳशतिश्चमेत्रयोविꣳशतिश्चमे पंच
विꣳशतिश्चमे सप्तविꣳशतिश्चमेनवविꣳशतिश्चमएकत्रिꣳशच्चमेत्रय
स्त्रिꣳशच्चमेचतस्रश्चमेष्टौचमेद्वादशचमे षोडशचमेविꣳशतिश्चमेचतु
र्विꣳशतिश्चमेष्टाविꣳशतिश्चमे द्वात्रिꣳशच्चमेषट्त्रिꣳशच्चमेचत्वारिꣳ
शच्चमे चतुश्चत्वारिꣳशच्चमेऽष्टाचत्वारिꣳशच्चमेवाजश्चप्रसवश्चापिज
श्चक्रतुश्चसुवश्च मूर्धाचव्यश्नियश्चांत्यायनश्चांत्यश्चभौवनश्चभुवनश्चा

धिपतिश्च ॥ ११ ॥ इडादेवहूर्मनु० ॥ सहनाववतु ॥ सहनौभुनक्तु ॥ सहवीर्यंकरवावहै ॥ तेजस्विनावधितमस्तुमाविद्विषावहै ॥ ॐशांतिः शांतिःशांतिः ॥ ॥ ॐतमुष्टुहियःस्विषुःसुधन्वायोविश्वस्यक्षयतिभेषजस्य ॥ यक्ष्वामहेसौमनसायरुद्रंनमोभिर्देवमसुरंदुवस्य ॥ इतिरुद्राध्यायःसमाप्तः ॥ ॥ श्रीसांबसदाशिवार्पणमस्तु ॥ ॥ ॥

इदं पुस्तकं मुम्बापुर्यां पाण्डुरङ्ग जावजी इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये मुद्रयित्वा प्रसिद्धिं नीतम् ॥ शकाब्दाः १८४९ सनाब्दाः १९२८.

पब्लिशरः—पांडुरंग जावजी, } निर्णयसागर प्रेस,
प्रिन्टरः—रामचंद्र येसू शेडगे, } २६।२८ कोलभाट लेन, मुंबई.

